# प्रतिज्ञा सूत्रम्

श्रीवेदपुरुषाय नमः । अथ प्रतिज्ञा
मन्त्रब्राह्मणयोर्वेदनामधेयं तस्मिञ्छुक्ले याजुषाम्नाये
माध्यन्दिनीयके मन्त्रे स्वरप्रक्रिया हृद्यनुदात्तो
मूर्ध्न्युदात्तः श्रुतिमूले स्वरितः एवं जात्यादयोऽभिहिता
ब्राह्मणे तूदात्तानुदात्तौ भाषिकस्वारौ तानस्वराणि
छन्दोवत्सूत्राणि १
अथान्तस्थानामाद्यस्य पदादिस्थस्यान्यहलसंयुक्तस्य
संयुक्तस्यापि रेफोष्मान्त्याभ्यामृकारेण
चाविशेषेणादिमध्यावसानेषूच्चारणे जकारोच्चारणं द्
विर्भावेऽप्येवमथापरान्तस्थस्यायुक्तान्यहलसंयुक्तस्यो
ष्मऽऋकारैरेकारसहितोच्चारणमेवं तृतीयान्तस्थस्य
क्वचिदृकारस्य तु संयुक्तासंयुक्तस्याविशेषेण
सर्वत्रैवमथान्त्यस्यान्तस्थानां पदादिमध्यान्तस्थस्य
त्रिविधं गुरुमध्यमलघुवृत्तिभिरुच्चारणमथो
मूर्धन्योष्मणोऽसंयुक्तस्य टुमृते संयुक्तस्य च खका
रोच्चारणमध्ययनादिकर्मस्वर्थवेलायां प्रकृत्या
२ अथानुस्वारस्यं इत्यादेशः शषसहरेफेषु
तस्य त्रैविध्यमाख्यातम् । ह्रस्वदीर्घगुरुभेदैर्
दीर्घात्परो ह्रस्वो ह्रस्वात्परो दीर्घो गुरौ परे गुरुः
परसवर्णेषत्प्रकृत्या चान्यत्र विसर्गेष्वीषद्विरामः
पदाद्यस्य संयुक्ताकारस्येषद्दीर्घता च भवतीषद्दीर्घता च
भवतीति ३

इति कात्यायनपरिशिष्टप्रतिज्ञासूत्रं समाप्तम्

Reference: Jagdishlal Shastri, Vājasaneyi-Mādhyandina-Śukla-Yajurveda-Saṁhitā, Motilal Banarsidass, Delhi: 1978, appendices. p. 6-7.